# चम्पूरामायणे

# बालकाण्डम्

२६ – १८.०६.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

# पुनरावर्तनम्

- विश्वामित्रस्य यागारम्भः, राक्षसानाम् अट्टहासः
- रामेण मध्येपयोनिधि क्षिप्तः मारीचः, कृत्तः सुबाहुः
- निरगात् पिशिताशनानां प्राणावलिः
- यजनजनितमूर्त्या अव्याजलक्ष्म्या रामं योक्तुम् अमनुत विश्वामित्रः

## अथ मिथिलां प्रति प्रस्थितः कौशिकः काकुत्स्थमित्थमकथयत् ।

- अथ, मिथिलाम्, प्रति, प्रस्थितः, कौशिकः, काकुत्स्थम्, इत्थम्, अकथयत् ।
- तात्पर्य्यम् – सीतया रामं योजयितुं निश्चित्य मिथिलां प्रति प्रस्थितः विश्वामित्रः रामम् एवम् अब्रवीत् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# पुरा खलु कुशेशयासनजन्मा कुशाभिधानो राजर्षिः कुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री बभूव ।

- पुरा, खलु, कुशेशय-आसन-जन्मा, कुश-अभिधानः, राज-ऋषिः, कुशाम्ब-प्रमुखैः, चतुर्भिः, कौशाम्बी-महोदय-धर्मारण्य-गिरिव्रज-आख्यानाम्, पुरीणाम्, कर्तृभिः, पुत्री, बभूव ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

पुरा खलु कुशेशयासनजन्मा कुशाभिधानो राजर्षिः कुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री बभूव ।

- पुरा खलु = प्राक्काले
- कुशेशयासनजन्मा = कमलासनस्य ब्रह्मणः पुत्रः
- कुशाभिधानः = कुशनामा
- राजर्षिः = नृपश्रेष्ठः
- कुशाम्बप्रमुखैः = कुशाम्बप्रभृतिभिः (कुशाम्बः, कुशनाभः, अधूर्तरजसः, वसुः)

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

पुरा खलु कुशेशयासनजन्मा कुशाभिधानो राजर्षिः कुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री बभूव ।

- चतुर्भिः = चतुःसंख्याकैः
- कौशाम्बी-महोदय-धर्मारण्य-गिरिव्रज-आख्यानाम्
- पुरीणाम् = नगरीणाम्
- कर्तृभिः = निर्मातृभिः
- पुत्री = पुत्रवान्
- बभूव

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

पुरा खलु कुशेशयासनजन्मा कुशाभिधानो राजर्षिः कुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री बभूव ।

- तात्पर्य्यम् – प्राक्काले कुशनामा चतुर्मुखब्रह्मणः पुत्रः आसीत् । तस्य चत्वारः पुत्राः – कुशाम्बः, कुशनाभः, अधूर्तरजसः, वसुः चेति । तैः क्रमशः कौशाम्बी, महोदयः, धर्मारण्यम्, गिरिव्रजः इत्येतानि नगराणि निर्मितानि ।

- कुशेशयासनजन्मा – कुशेशयम् आसनं यस्य सः, कुशेशयासनात् जन्म यस्य सः । नकारान्तः, पुं, १.१ । "सहस्रपत्रं कमलं शतपत्रं कुशेशयम्" (अमरः)

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

पुरा खलु कुशेशयासनजन्मा कुशाभिधानो राजर्षिः कुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बीमहोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री बभूव ।

- कुशाभिधानः – कुशः अभिधानं यस्य सः
- राजर्षिः – राजा ऋषिः इव ।
- कुशाम्बप्रमुखैः – कुशाम्बः प्रमुखः येषां ते, तैः
- पुत्री – पुत्राः अस्य सन्ति – पुत्र + इनि (तद्धितः) । नकारान्तः, पुं, १.१

# कुशनाभस्तु घृतीच्यां कन्याशतमजनयत् ।

- कुशनाभः, तु, घृतीच्याम्, कन्याशतम्, अजनयत् ।
- तात्पर्य्यम् – कुशस्य द्वितीयः पुत्रः कुशनाभः घृताचीनामिकायां अप्सरसि शतसंख्याकाः कन्यकाः उत्पादयामास ।

कन्यास्ताः संनद्धयौवनाः कामयमानः पवमानः
प्रत्याख्यानात्प्रत्यापन्नमन्युरासामवयवेष्वनार्जवमतनुत ।

- कन्याः, ताः, संनद्ध-यौवनाः, कामयमानः, पवमानः, प्रत्याख्यानात्, प्रत्यापन्न-मन्युः, आसाम्, अवयवेषु, अनार्जवम्, अतनुत ।
- ताः कन्याः = कुशनाभस्य पुत्रीशतम्
- संनद्धयौवनाः = तारुण्यापन्नाः
- कामयमानः = अभिलषमाणः
- पवमानः = वायुः

# कन्यास्ताः संनद्धयौवनाः कामयमानः पवमानः प्रत्याख्यानात्प्रत्यापन्नमन्युरासामवयवेष्वनार्जवमतनुत ।

- प्रत्याख्यानात् = निराकरणात् (“वयं पित्रधीनाः, तमेवाभ्यर्थय” इत्युक्तः)
- प्रत्यापन्नमन्युः = उत्पन्नक्रोधः
- आसाम् = कन्यकानाम्
- अवयवेषु = अङ्गेषु
- अनार्जवम् = कौटिल्यम्
- अतनुत = जनयामास

# कन्यास्ताः संनद्धयौवनाः काममानाः पवमानः प्रत्याख्यानात्प्रत्यापन्नमन्युरासामवयवेष्वनार्जवमतनुत ।

- तात्पर्य्यम् – कदाचित् वायुदेवः कुशनाभस्य पुत्रीशतम् अभिलषमाणः ताभिः तिरस्कृतः सन् कोपेन तासामङ्गेषु कौटिल्यम् उत्पादितवान् ।

- संनद्धयौवनाः – संनद्धं यौवनं यासां ताः
- काममानाः – "कमु कान्तौ" + शानच्

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# कन्यास्ताः संनद्धयौवनाः कामयमानः पवमानः प्रत्याख्यानात्प्रत्यापन्नमन्युरासामवयवेष्वनार्जवमतनुत ।

- पवमानः – “नभस्वद्-वात-पवन-पवमान-प्रभञ्जनाः” (अमरः)
- प्रत्यापन्नमन्युः – प्रत्यापन्नः मन्युः यस्य सः ।
- अनार्जवम् – ऋजोः भावः आर्जवम् । न आर्जवम् ।
- अतनुत – “तनु विस्तारे” – आत्मनेपदे लङ् प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value ...

# अथ विदितवृत्तान्तेन कुशनाभेन तेन क्षमामेव प्रतिक्रियां मन्यमानेन चूलिसूनवे सौमदेयाय राज्ञे ब्रह्मदत्ताय दत्तास्ताः प्रकृतिस्था बभूवुः ।

- अथ, विदित-वृत्तान्तेन, कुशनाभेन, तेन, क्षमाम्, एव, प्रतिक्रियाम्, मन्यमानेन, चूलि-सूनवे, सौमदेयाय, राज्ञे, ब्रह्मदत्ताय, दत्ताः, ताः, प्रकृतिस्थाः, बभूवुः
- अथ = तदनन्तरम्
- विदितवृत्तान्तेन = ज्ञातविचारेण (कन्यकानां वायुशापेन प्राप्तां दुरवस्थां विज्ञाय)

अथ विदितवृत्तान्तेन कुशनाभेन तेन क्षमामेव प्रतिक्रियां मन्यमानेन चूलिसूनवे सौमदेयाय राज्ञे ब्रह्मदत्ताय दत्तास्ताः प्रकृतिस्था बभूवुः ।

- तेन कुशनाभेन
- क्षमाम् एव = क्षान्तिम् एव, न तु क्रोधम्
- प्रतिक्रियाम् = प्रतिस्पन्दम्
- मन्यमानेन = भावयता
- चूलिसूनवे सौमदेयाय = चूलिमहर्षेः सोमदानाम्न्याः गन्धर्वस्त्रियाश्च पुत्राय

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value ...

# अथ विदितवृत्तान्तेन कुशनाभेन तेन क्षमामेव प्रतिक्रियां मन्यमानेन चूलिसूनवे सौमदेयाय राज्ञे ब्रह्मदत्ताय दत्तास्ताः प्रकृतिस्था बभूवुः ।

- राज्ञे ब्रह्मदत्ताय
- दत्ताः = भार्यात्वेन प्रदत्ताः
- ताः = कुशनाभस्य पुत्र्यः
- प्रकृतिस्थाः = तत्प्रभावात् यथापूर्वरूपाः
- बभूवुः = अभूवन्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value ...

अथ विदितवृत्तान्तेन कुशनाभेन तेन क्षमामेव प्रतिक्रियां मन्यमानेन चूलिसूनवे सौमदेयाय राज्ञे ब्रह्मदत्ताय दत्तास्ताः प्रकृतिस्था बभूवुः ।

- तात्पर्य्यम् – वायुशापेन पुत्रीणाम् अङ्गवैकल्यं ज्ञात्वापि कुशनाभः क्षान्तिमेव आश्रितवान्, न तु क्रोधं प्रदर्शयामास । ततश्च चूलि-सोमदयोः पुत्राय ब्रह्मदत्तनामकाय नृपाय स्वपुत्रीः विवाहे प्रदत्तवान् । तत्प्रभावेण च ताः कन्याः शापान्मुक्ताः पूर्वरूपं प्राप्तवत्यः ।

अथ विदितवृत्तान्तेन कुशनाभेन तेन क्षमामेव प्रतिक्रियां मन्यमानेन चूलिसूनवे सौमदेयाय राज्ञे ब्रह्मदत्ताय दत्तास्ताः प्रकृतिस्था बभूवुः ।

- विदितवृत्तान्तेन – विदितः वृत्तान्तः येन सः, तेन
- चूलिसूनवे – उकारान्तः, पुं, ४.१ । चूलेः सूनुः, तस्मै ।
- सौमदेयाय – सोमदायाः अपत्यं पुमान्, तस्मै । अकारान्तः, पुं, ४.१ ।
- प्रकृतिस्थाः – प्रकृतौ तिष्ठन्ति – उपपदसमासः
- बभूवुः – “भू सत्तायाम्” – लिट्, प्रथम.३

# पुनरपि कुशनाभस्तु पुत्रीयन्पितुः प्रसादादगाधसत्त्वान्गाधिसंज्ञानस्मत्तातपादानुदपादयत् ।

- पुनः, अपि, कुशनाभः, तु, पुत्रीयन्, पितुः, प्रसादात्, अगाध-सत्त्वान्, गाधि-संज्ञान्, अस्मत्-तातपादान्, उदपादयत्
- पुनरपि कुशनाभः
- पुत्रीयन् = पुत्रम् आत्मनः इच्छन्
- पितुः = ब्रह्मसूनोः कुशस्य
- प्रसादात् = अनुग्रहात्

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# पुनरपि कुशनाभस्तु पुत्रीयन्पितुः प्रसादादगाधसत्त्वान्गाधिसंज्ञानस्मत्तातपादानुदपादयत् ।

- अगाधसत्त्वान् = महापराक्रमिणम्
- गाधिसंज्ञान् = गाधिनामकम्
- अस्मत्तातपादान् = मम (विश्वामित्रस्य) पितरम्
- उदपादयत् = जनयामास

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# पुनरपि कुशनाभस्तु पुतीयन्पितुः प्रसादादगाधसत्त्वान्गाधिसंज्ञानस्मत्तातपादानुदपादयत् ।

- तात्पर्य्यम् – ततः कुशनाभः पुत्रं प्राप्तुम् इच्छन् पितुः कुशस्य अनुग्रहात् गाधिनामकं महापराक्रमिणं विश्वामित्रस्य पितरं जनयामास

- पुत्रीयन् – पुत्रम् आत्मनः इच्छति – पुत्र + क्यच् (नामधातुः) + शतृ । तकारान्तः, पुं, १.१

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# पुनरपि कुशनाभस्तु पुत्रीयन्पितुः
# प्रसादादगाधसत्त्वान्गाधिसंज्ञानस्मत्तातपादानुदपादयत् ।

- अगाधसत्त्वान् – अगाधं सत्त्वं यस्य सः । पूजार्थं बहुवचनम् ।
- गाधिसंज्ञान् – गाधिः संज्ञा यस्य सः
- तातपादान् – "तातस्तु जनकः पिता" (अमरः)
- उदपादयत् – उत् + पद् + णिच् – लङ्, प्रथम.१

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशमननिरायामयामिनीयामानुबन्धो बन्धूकस्तबकसुन्दरबन्धुरेण सन्ध्यारागेण प्राचीमुखेन शोणीकृतेन शोणाभिधानं दधानेन नदेन प्रवर्तितप्रत्यूषकृत्यः कृतनियमेन मुनिना सह गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत ।

- इत्थम्, दाशरथिः, कौशिक-उत्पत्ति-कथा-निशमन-निरायाम-यामिनी-याम-अनुबन्धः, बन्धूक-स्तबक-सुन्दर-बन्धुरेण, सन्ध्या-रागेण, प्राची-मुखेन, शोणीकृतेन, शोण-अभिधानम्, दधानेन, नदेन, प्रवर्तित-प्रत्यूष-कृत्यः, कृत-नियमेन, मुनिना, सह, गङ्गाम्, उपतिष्ठमानेन, पथा, प्रातिष्ठत

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

# इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशमननिरायामयामिनीयामानुबन्धः

- इत्थम् = पूर्वोक्तप्रकारेण
- दाशरथिः = श्रीरामः
- कौशिकस्य = विश्वामित्रस्य, उत्पत्तिकथा = जन्मवृत्तान्तः, तस्य निशमनम् = श्रवणम्, तेन निरायामः = अदीर्घः, यामिन्याः = रात्रेः, यामानुबन्धः = प्रहरानुवृत्तिः यस्य तादृशः सन्

Vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

# बन्धूकस्तबकसुन्दरबन्धुरेण सन्ध्यारागेण प्राचीमुखेन शोणीकृतेन

- बन्धूकस्तबकम् = बन्धूकपुष्पस्य गुच्छम्, तद्वत् सुन्दरेण = रमणीयेन, बन्धुरेण = मनोहरेण
- सन्ध्यारागेण = अरुणोदयकालिक-रक्तवर्णयुतेन
- प्राचीमुखेन = पूर्वदिग्भागेन
- शोणीकृतेन = अनुरञ्जितेन

# शोणाभिधानं दधानेन नदेन प्रवर्तितप्रत्यूषकृत्यः कृतनियमेन मुनिना सह

- शोणाभिधानेन नदेन = शोणास्रोतसः जलेन
- प्रवर्तितम् = अनुष्ठितम्, प्रत्यूषकृत्यम् = प्रातराह्निकम् (स्नानम्, सन्ध्यावन्दनं च) येन तादृशः सन्
- कृतनियमेन = विहित-अनुष्ठानेन
- मुनिना सह = विश्वामित्रेण सार्धम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

# गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत ।

- गङ्गाम् = भागीरथीम्
- उपतिष्ठमानेन = अनुसरता
- पथा = मार्गेण
- प्रातिष्ठत = प्रस्थितः

# इत्थं दाशरथिः ... गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत ।

- तात्पर्य्यम् – विश्वामित्रस्य जननवृत्तान्तश्रवणेन रात्रिकालः अदीर्घ इव आसीत् श्रीरामस्य । परेद्युः प्रातः अरुणोदयकाले बन्धूकपुष्पगुच्छवत् सुन्दरी पूर्वा दिक्, तया च अरुणितं शोणास्रोतसः जलम् । तत्र प्रातःकृत्यं निर्वर्त्य विश्वामित्रेण सह श्रीरामः गङ्गानदीमार्गेण प्रस्थितः ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# इत्थं दाशरथिः ... गङ्गामुपतिष्ठमानेन पथा प्रातिष्ठत ।

- नदेन – प्राक्स्रोतसः नद्यः, प्रत्यक्स्रोतसः नदाः ।
- प्रत्यूषः – "प्रत्यूषोऽहर्मुखं कल्यम् उषः-प्रत्युषसी अपि" (अमरः)
- पथा – नकारान्तः, पुं, "पथिन्", ३.१
- प्रातिष्ठत – प्र + "ष्ठा गतिनिवृत्त्योः" – आत्मनेपदे लङ्, प्रथम.१ । सम्-अव-प्र-वि-पूर्वकः ष्ठाधातुः आत्मनेपदी भवति ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education ...

# आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
# श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- आजान-पावन-क्षीराम्, वृष-आनन्द-विधायिनीम्, श्रुति-प्रणयिनीम्, सः, अयम्, आपगाम्, आप, गाम्, इव
- आप = प्राप्तवान्
- कः आप? सोऽयम् = श्रीरामः
- काम् आप? आपगाम् = नदीम्

आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- कीदृशीम् आपगाम्? आजानपावनक्षीराम्, वृषानन्दविधायिनीम्, श्रुतिप्रणयिनीम्
- आजानपावनक्षीराम् = स्वभावशुद्धं जलं यस्याः तादृशीम्
- वृषानन्दविधायिनीम् – वृषैः = यमनियमादिभिः धर्मैः, यः आनन्दः, तं विदधाति / वृषः = सुकृतम्, तस्य आनन्दं विदधाति / वृषम् = धर्मम्, आनन्दं च विदधाति
- श्रुतिप्रणयिनीम् = वेदप्रतिपाद्याम् / कर्णानन्दकरीम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education...

# आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
# श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- कामिव आप? गाम् इव = धेनुम् इव
- कीदृशीं गाम् इव? आजानपावनक्षीराम्, वृषानन्दविधायिनीम्, श्रुतिप्रणयिनीम्
- आजानपावनक्षीराम् = स्वभावतः पवित्रं दुग्धं यस्याः तादृशीम्
- वृषानन्दविधायिनीम् – वृषस्य = वृषभस्य आनन्दं विदधाति
- श्रुतिप्रणयिनीम् = वेदकल्पाम् ("चत्वारि वाक्परिमिता पदानि" इति श्रुत्या वेदवाक्यानि धेनुत्वेन निरूपितानि),

# आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
# श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- पुनः कामिव आप? गाम् इव = कामधेनुम् इव
- आजानपावनक्षीराम् = स्वभावतः पवित्रं दुग्धं यस्याः तादृशीम्
- वृषानन्दविधायिनीम् – वृषस्य = इन्द्रस्य आनन्दं विदधाति
- श्रुतिप्रणयिनीम् – "स्वर्गे लोके कामधुग्भवति" इत्यादिभिः श्रुतिभिः उदाहरणीयम्

vyoma || वाचं धेनुमुपासीत || Samskritam -Value Education

# आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
# श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- पुनः कामिव आप? गाम् इव = भूमिम् इव
- आजानपावनक्षीराम् = स्वभावतः पवित्राणि क्षीराणि = रत्नमहौषधिप्रभृतीनि वस्तूनि यस्याः ताम्
- वृषानन्दविधायिनीम् – वृषस्य = विष्णोः आनन्दं विदधाति
- श्रुतिप्रणयिनीम् – वेदप्रतिपाद्याम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
# श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- पुनः कामिव आप? गाम् इव = सरस्वतीम् इव
- आजानपावनक्षीराम् – आजानपावना = स्वभावतः पवित्रा क्षीरा = क्षीरवत् शुभ्रवर्णा च
- वृषानन्दविधायिनीम् – वृषस्य = ब्रह्मणः आनन्दं विदधाति
- श्रुतिप्रणयिनीम् = वेदस्वरूपिणीम्

आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- अन्वयः – सोऽयम् आजानपावनक्षीराम्, वृषानन्दविधायिनीम्, श्रुतिप्रणयिनीम् आपगाम् गाम् इव आप ।
- तात्पर्य्यम् – श्रीरामः स्वभावपरिशुद्धजलयुक्तां, धर्माचरणस्य आनन्दं विदधानां, वेदप्रतिपाद्यां गङ्गानदीं गाम् इव प्राप्तवान् ।

vyoma ॥ वाचं धेनुमुपासीत॥ Samskritam - Value Education

# आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
# श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- आजानपावनक्षीराम् – आजानं पावनम्, आजानपावनं क्षीरं यस्याः सा, ताम् । “क्षीरं स्यात् नीर-दुग्धयोः” (रत्नमाला), “अम्भोऽर्णः तोय-पानीय-नीर-क्षीर-अम्बु-शम्बरम्”, “दुग्धं क्षीरं पयः समम्” (अमरः)
- वृषानन्दविधायिनीम् – वृषस्य आनन्दः, वृषानन्दं विदधाति । “वृषः स्याद् वासवे धर्मे सौरभेये च शुक्रजे” (विश्वः), “तेजो वृषो द्युतिधरः” (विष्णुसहस्रनाम)

आजानपावनक्षीरां वृषानन्दविधायिनीम् ।
श्रुतिप्रणयिनीं सोऽयमापगामाप गामिव ॥५४॥

- श्रुतिप्रणयिनीम् – श्रुतेः प्रणयिनी, ताम् । “श्रुतिः श्रोत्रे तथाम्नाये” (विश्वः)
- आपगाम् – अपां समूहः आपम् । आपेन = जलसमूहेन गच्छति इति आपगा । “नदी सरित् … स्रवन्ती निम्नगा-आपगा” (अमरः)
- आप – “आप्लृ व्याप्तौ” – लिट्, प्रथम.१
- गाम् – “गौर्नादित्ये बलीवर्दे ऋतुभेद-ऋषिभेदयोः । स्त्री तु स्याद् दिशि भारत्याम् भूमौ च सुरभावपि” (केशवः)

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# सङ्क्षेपः

- कुशः – तत्पुत्राः
- कुशनाभस्य पुत्रीणां कथा
- कुशनाभः – गाधिः – विश्वामित्रः
- गङ्गानदीमार्गेण प्रस्थिताः रामादयः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in